न्योन्याभाव-संसर्गाभावयोर्बोधने नञोऽसामर्थ्यं, तेन नं

---

इत्यादौ भूतलादिपद-नञ्पदयोः समानविभक्तिकत्वेऽपि नानु-याजेषु यजतिष्वित्यादौ नञः सप्तम्यन्तताविरहेण यजत्यादिपद-समानविभक्तिकताविरहात् तदर्थस्याभाववतो यजत्यादावभेदान्वया-सम्भव इति वाच्यम्। निपातोत्तरं सर्व्वविभक्त्युत्पादाभ्युपगमात्। अतएवैवकारवादे पृथिव्यामेव गन्ध इत्यादौ एवकारोत्तरसप्तम्यर्थ-व्यवच्छेदबोधो दीधितिकृतैवाभिहितः। अयं न पचति इदं न राज्ञ इत्यत्र प्रतियोग्यनुयोगिभावसम्बन्धेन न कथं विभक्त्यर्थविशे-षितभेदबोधः न कथं वा भूतलं न घट इत्यादौ भूतलादौ घटादिसंसर्गाभावबोधः नञर्थसंसर्गाभावे घटादिपदोत्तरप्रथमाया-घटादिप्रतियोगिकत्वस्य नञ्पदोत्तरप्रथमायास्वाभावाधारत्वस्य भूत-लादौ बोधनसम्भवादित्यत आह, 'विभक्त्यर्थे'ति विभक्त्यर्थान्योन्याभावस्य समानविभक्तिकपदार्थयोः संसर्गाभावस्य बोधने नञो न सामर्थ्य-

---

यत्तु विशेषणविशेष्यपदयोर्विरुद्धविभक्तिराहित्यं अन्योन्याभावबोधे प्राङ्नियामकमुक्तं तत्र विरुद्धत्वं विरुद्धार्थकत्वं अन्यथा अव्ययस्थले कर्म्म-त्वाद्यर्थकप्रथमान्तार्थस्य शुद्धप्रथमान्तार्थेन नञोऽन्योन्याभावबोधापातात् तथाच यथा ब्राह्मणस्य धनं न मूर्खस्य इत्यादौ नञर्थे भेदे मूर्खानुयोगित्वस्य बोधे नञर्थस्याधिकरणत्वेनान्वये मूर्खभिन्नस्य ब्राह्मणस्येत्यर्थो लभ्यते तथा प्रतियोगिपदोत्तरस्य सुपः प्रतियोगित्वादौ लाक्षणिकत्वेऽनुयोगिपदस्य शुद्ध-सुबन्तत्वे विरुद्धार्थकत्वमेव विभक्तेरिति प्रागुक्तनियामकासम्भवात् अनियमेन सुबर्थप्रतियोगित्वादेरिव तिङादि-षष्ठ्याद्यर्थकृतिसम्बन्धादेरपि नञर्थेऽन्यो-न्याभावे साक्षादन्वयेन न पचति न राज्ञ इत्यादौ कृति-सम्बन्धयोर्भेदबोधा-

पचति न राम इत्यादौ कृत्यादेरन्योन्याभावो भूतलं न घट इत्यादौ घटादेः संसर्गाभावो न प्रतीयते इत्याहुः

इति महामहोपाध्यायश्रीरघुनाथशिरोमणिभट्टाचार्य्य-
विरचितं नञ्वादरहस्यं सम्पूर्णं ।

---

---

मित्यर्थः । असामर्थ्यञ्च तादृशतादृशप्रतियोग्यनुयोगिवाचकपदाभ्यां नञ्पदसमभिव्याहारज्ञानस्य तादृशफलानुत्पादकतया तत्कारणत्वानुपगमादिति भावः । 'आहु'रित्यस्वरससूचनाय स च प्रथमाविभक्त्या सङ्ख्याद्यतिरिक्तार्थबोधने तस्या असाधुत्वापत्तेरिति ।

इति महामहोपाध्याय-श्रीगदाधरभट्टाचार्य्यविरचिता
नञ्वादटिप्पनी समाप्ता ।

---

---

पत्तिः, एवं नञर्थे संसर्गाभावे भेदान्वयोपपत्त्यर्थमनुयोगिपदे सप्तम्यपेक्षा स च नञुत्तरस्य सुपोऽधिकरणत्वेन लक्षणयैवोपपन्न इति नञोऽभाववल्लाक्षणिकत्वे तु भेदान्वयप्रसङ्गाभावात् अभेदान्वये सप्तम्या अप्रयोजकत्वं इति व्याख्यान्तरं अत्यन्तसमीचीनं ।

---